॥ श्रीमहाकालसहस्रनामस्तोत्रम् ॥

श्रीप्रकृष्टनन्दोक्तागमे

ऋषिरुवाच-
महाकालसहस्रं तु श्रोतुमिच्छामि सुव्रत! ।
कथयस्व प्रसादेन शिष्याय वक्तुमर्हसि ॥ १॥

सूत उवाच-
सुधामयः सुतः श्रीमान् सुदामा नाम वै द्विजः ।
तेन गोपीपतिः कृष्णो विद्यामभ्यसितुङ्गतः ॥ २॥

सान्दीपनान्तिकेऽवन्त्यां गतौ तौ पठनार्थिनौ ।
चतुःषष्टिः कलाः सर्वाः कृता विद्याश्चतुर्दश ॥ ३॥

एकदा प्राह कृष्णं स सुदामा द्विजसत्तमः ।
सुदामोवाच-
महाकालं प्रतिबिल्वं केन मन्त्रेण वाऽर्पणम् ॥ ४॥

करोमि वद मे कृष्ण ! कृपया सात्त्वताम्पते ! ।
श्रीकृष्ण उवाच -
शृणु मित्र! महाप्राज्ञ! कथयामि तवाग्रतः ॥ ५॥

सहस्रं कालकालस्य महाकालस्य वै द्विज ! ।
सुगोप्यं सर्वदा विप्र! भक्तायाभाषितं मया ॥ ६॥

कुरु बिल्वार्पणं तेन येन त्वं विन्दसे सुखम् ।
सहस्रस्यास्य ऋष्योऽहं छन्दोऽनुष्टुप् तथैव च ॥ ७॥

देवः प्रोक्तो महाकालो विनियोगश्च सिद्धये ।
सङ्कल्प्यैवं ततो ध्यायेन्महाकालविभुं मुदा ॥ ८॥

विनियोगः ।
ॐ अस्य श्रीमहाकालसहस्रनामस्तोत्रमालामन्त्रस्य श्रीकृष्णऋषिः ।
अनुष्टुप्छन्दः । श्रीमहाकालो देवता । ॐ बीजं । नमः शक्तिः ।
महाकालायेति कीलकं । सर्वार्थसिद्ध्ये पाठे विनियोगः ।

ऋष्यादिन्यासः ।

ॐ श्रीकृष्णर्षये नमः शिरसि । अनुष्टुप्छन्दसे नमः मुखे ।
महाकालदेवतायै नमः हृदये । ॐ बीजाय नमः गुह्ये ।
नमः शक्तये नमः पादयोः । महाकालायेति कीलकाय नमः नाभौ ॥

श्रीमहाकालप्रीतर्थे सहस्रनामस्तोत्रपाठे विनियोगाय नमः सर्वाङ्गे ॥

करन्यास एवं हृदयादिन्यास ॥
करन्यासः ।
ॐ अङ्गुष्ठाभ्यां नमः । महाकालाय तर्जनीभ्यां नमः ।
नमः मध्यमाभ्यां नमः । ॐ अनामिकाभ्यां नमः ।
महाकालाय कनिष्ठिकाभ्यां नमः ।
नमः करतलकरपृष्ठाभ्यां नमः ॥

अङ्गन्यास ।
ॐ हृदयाय नमः । महाकालाय शिरसे स्वाहा ।
नमः शिखायै वषट् । ॐ कवचाय हुम् ।
महाकालाय नेत्रत्रयाय वौषट् । नमः अस्त्राय फट् ।
व्यापक न्यास - ॐ महाकालाय नमः ॥

अथ ध्यानम् -
कुङ्कुमागरु-कस्तूरी-केशरेण विचर्चितम् ।
नानापुष्पस्रजालङ्कृद्बिल्वमौलिवलान्वितम् ॥ ९॥

पुरो नन्दी स्थितो वामे गिरिराजकुमारिका ।
ब्राह्मणैरावृतं नित्यं महाकालमहं भजे ॥ १०॥

॥ इति ध्यानम् ॥

ॐ महाकालो महारूपो महादेवो महेश्वरः ।
महाप्राज्ञो महाशम्भुर्महेशो मोहभञ्जनः ॥ ११॥

मान्यो मन्मथहन्ता च मोहनो मृत्युनाशनः ।
मान्यदो माधवो मोक्षो मोक्षदो मरणापहा ॥ १२॥

मुहूर्तो मुनिवन्द्यश्च मनुरूपो मनुर्मनुः ।
मन्मथारिर्महाप्राज्ञो मनोनन्दो ममत्वहा ॥ १३॥

मुनीशो मुनिकर्ता च महत्त्वं महदाधिपः ।

मैनाको मैनकावन्द्यो मध्वरिप्राणवल्लभः ॥ १४॥

महालयेश्वरो मोक्षो मेघनादेश्वराभिधः ।
मुक्तीश्वरो महामुक्तो मन्त्रज्ञो मन्त्रकारकः ॥ १५॥

मङ्गलो मङ्गलाधीशो मध्यदेशपतिर्महान् ।
मागधो मन्मथो मत्तो मातङ्गो मालतीपति ॥ १६॥

माथुरो मथुरानाथो मालवाधीश-मन्युपः ।
मारुतिर्मीनपो मौनो मार्कण्डो मण्डलो मृडः ॥ १७॥

मधुप्रियो मधुस्नायी मिष्टभोजी मृणालधृक् ।
मञ्जुलो मल्लमोदज्ञो मोदकृन्मोददायकः ॥ १८॥

मुक्तिदो मुक्तरूपश्च मुक्तामालाविभूषितः ।
मृकण्डो मोदपो मोदो मोदकाशनकारकः ॥ १९॥

यज्ञो यज्ञपतिर्यज्ञो यज्ञेशो यज्ञनाशनः ।
यज्ञतेजा यशो योगी योगीशो योगदायकः ॥ २०॥

यतिरूपो याज्ञवल्क्यो यज्ञकृद् यज्ञलुप्तहा ।
यज्ञमृद् यज्ञहा यज्ञो यज्ञभुग् यज्ञसाधकः ॥ २१॥

यज्ञाङ्गो यज्ञहोता च यज्वानो यजनो यतिः ।
यशःप्रदो यशःकर्ता यशो यज्ञोपवीतधृक् ॥ २२॥

यज्ञसेनो याज्ञिकश्च यशोदावरदायकः ।
यमेशो यमकर्ता च यमदूत-निवारणः ॥ २३॥

याचको यमुनाक्रीडो याज्ञसेनी-हितप्रदः ।
यवप्रियो यवरूपो यवनान्तो यवी यवः ॥ २४॥

ऋग्वेदो रोगहन्ता च रन्तिदेवो रणाग्रणीः ।
रैवतो रैवताधीशो रैवतेश्वर-संज्ञकः ॥ २५॥

रामेश्वरो रकारश्च रामप्रियो रमाप्रियः ।
रणी रणहरो रक्षो रक्षको ऋण-हारकः ॥ २६॥

रक्षिता राजरूपो राट् रवो रूपो रजःप्रदः ।
रामचन्द्रप्रियो राजा रक्षोघ्नो राक्षसाधिपः ॥ २७॥

राक्षसान् वरदो रामो राक्षसान्तकरो रथी ।
रथप्रियो रथस्थायी रथहा रथहारकः ॥ २८॥

रावणप्रियकृद् राव-स्वरूपश्च ऋतूरजः ॥

रति-वरप्रदाता च रन्तिदेव-वरप्रदः ॥ २९॥

राजधानीप्रदो रेतो रेवाभञ्जो रवी रजी ।
ऋत्विजो रसकर्ता च रसज्ञो रसदायकः ॥ ३०॥

रुद्रो रुद्राक्षधृग् रौद्रो रत्नो रत्नैर्विभूषितः ।
रूपेश्वरो रमापूज्यो रुरु-राज्य-स्थलेश्वरः ॥ ३१॥

लक्षो लक्षपतिर्लिङ्गो लड्डुको लड्डुकप्रियः ।
लीलाम्बरधरो लाभो लाभदो लाभकृत् सदा ॥ ३२॥

लज्जारक्षो लघुरूपो लेखको लेखकप्रियः ।
लाङ्गलो लवणाब्धीशो लक्ष्मीपूजितलक्षकः ॥ ३३॥

लोकपालेश्वरो लम्पो लङ्केशो लम्पकेश्वरः ।
वह्निर्नेत्रो वराङ्गश्च वसुरूपो वसुप्रदः ॥ ३४॥

वरेण्यो वरदो वेदो वेदवेदाङ्ग-पारगः ।
वृद्धकालेश्वरो वृद्धो विभवो विभवप्रद ॥ ३५॥

वेणुगीतप्रियो वैद्यो वाराणसीस्थितः सदा ।
विश्वेशो विश्वकर्ता च विश्वनाथो विनायकः ॥ ३६॥

वेदज्ञो वर्णकृद् वर्णो वर्णाश्रम-फलप्रदः ।
विश्ववन्द्यो विश्ववेत्ता विश्वावसुर्विभावसुः ॥ ३७॥

वित्तरूपो वित्तकर्ता वित्तदो विश्वभावनः ।
विश्वात्मा वैश्वदेवश्च वनेशो वनपालकः ॥ ३८॥

वनवासी वृषस्थायी वृषभो वृषभप्रियः ।

विल्वीदलप्रियो विल्वो विशालनेत्रसंस्थितः ॥ ३९॥

वृषध्वजो वृषाधीशो वृषभेशो वृषप्रियः ।
विल्वेश्वरो वरो वीरो वीरेशश्च वनेश्वरः ॥ ४०॥

विभूति-भूषितो वेण्यो व्यालयज्ञोपवीतकः ।
विश्वेश्वरो वरानन्दो वटरूपो वटेश्वरः ॥ ४१॥

सर्वेशः सत्त्वः सारङ्गो सत्त्वरूपः सनातनः ।
सद्वन्धः सच्चिदानन्दः सदानन्दः शिवप्रियः ॥ ४२॥

शिवदः शिवकृत् साम्बः शशिशेखर-शोभनः ।
शरण्यः सुखदः सेव्यः शतानन्दवरप्रदः ॥ ४३॥

सात्त्विकः सात्त्वतः शम्भुः शङ्करः सर्वगः शिवः ।
सेवाफल-प्रदाता च सेवक-प्रतिपालकः ॥ ४४॥

शत्रुघ्नः सामगः शौरिः सेनानीः शर्वरीप्रियः ।
श्मशानी स्कन्दसद्वेदः सदा सुरसरित्प्रियः ॥ ४५॥

सुदर्शनधरः शुद्धः सर्वसौभाग्यदायकः ।
सौभाग्यः सुभगः सूरः सूर्यः सारङ्गमुक्तिदः ॥ ४६॥

सप्तस्वरश्च सप्ताश्वः सप्तः सप्तर्षिपूजितः ।
शितिकण्ठः शिवाधीशः सङ्गमः सङ्गमेश्वरः ॥ ४७॥

सोमेशः सोमतीर्थेशः सर्पधृक् स्वर्णकारकः ।
स्वर्णजालेश्वरः सिद्धः सिद्धेशः सिद्धिदायकः ॥ ४८॥

सर्वसाक्षी सर्वरूपः सर्वज्ञः शास्त्र-संस्कृतः ।
सौभाग्येश्वरः सिंहस्थः शिवेशः सिंहकेश्वरः ॥ ४९॥

शूलेश्वरः शुकानन्दः सहस्र-धेनुकेश्वरः ।
स्यन्दनस्थः सुराधीशः सनकाद्यर्चितः सुधीः ॥ ५०॥

षडूर्मिः षट्-सुचक्रज्ञः षट्चक्रक-विभेदकः ।
षडाननः षडङ्गज्ञः षड्रसज्ञः षडाननः ॥ ५१॥

हरो हंसो हतारातिर्हिरण्यो हाटकेश्वरः ।
हेरम्बो हवनो होता हयरूपो हयप्रदः ॥ ५२॥

हस्तिदो हस्तित्वग्धारी हाहा-हूहू-वरप्रदः ।
हव्य-हेम-हविष्यान्नो हाटकेशो हविःप्रियः ॥ ५३॥

हिरण्यरेता हंसज्ञो हिरण्यो हाटकेश्वरः ।
हनुमदीशो हरो हर्षो हरसिद्धिपीठगः ॥ ५४॥

हैमो हैमालयो हूहू-हाहाहेतुर्हठो हठी ।
क्षत्रः क्षत्रप्रदः क्षत्री क्षेत्रज्ञः क्षेत्रनायकः ॥ ५५॥

क्षेमः क्षेमप्रदाता च क्षान्तिकृत् क्षान्तिवर्धनः ।
क्षीरार्णवः क्षीरभोक्ता क्षिप्राकूलक्षितेः पतिः ॥ ५६॥

क्षौद्ररसप्रियः क्षीरः क्षिप्रसिद्धिप्रदः सदा ।
ज्ञानो ज्ञानप्रदो ज्ञेयो ज्ञानातीतो ज्ञपो ज्ञयः ॥ ५७॥

ज्ञानरूपो ज्ञानगम्यो ज्ञानी ज्ञानवतांवरः ।
अजो ह्यनन्तश्चाव्यक्त आद्य आनन्ददायकः ॥ ५८॥

अकथ आत्मा ह्यान्दश्चाजेयो ह्यज आत्मभूः ।
आद्यरूपो ह्यरिच्छेत्ताऽनामयश्चाप्यलौकिकः ॥

अतिरूपो ह्यखण्डात्मा चात्मज्ञानरतः सदा ।
आत्मवेत्ता ह्यात्मसाक्षी अनादिश्चान्तरात्मगः ॥ ६०॥

आनन्देशोऽविमुक्तेशश्चालर्केशोऽप्सरेश्वरः ।
आदिकल्पेश्वरोऽगस्त्यश्चाक्रूरेशोऽरुणेश्वरः ॥ ६१॥

इडारूप इभच्छेत्ता ईश्वरश्चेन्दिरार्चितः ।
इन्दुरिन्दीवरश्चेश ईशानेश्वर ईर्षहा ॥ ६२॥

इज्य इन्दीवरश्चेभ इक्षुरिक्षुरस-प्रियः ।
उमाकान्त उमास्वामी तथोमायाः प्रमोदकृत् ॥ ६३॥

उर्वशी-वरद उच्चैरूरुत्तुङ्गधारकः । ?
एकरूप एकस्वामी ह्येकात्मा चैकरूपवान् ॥ ६४॥

ऐरावत ऐस्थिरात्मा चैकारैश्वर्यदायकः ।
ओकार ओजस्वांश्चैव ह्यौखरश्चौखराधिपः ॥ ६५॥

औषध्य औषधिज्ञाता ह्योजोद औषधीश्वरः ।
अनन्तो ह्यन्तकश्चान्तो ह्यन्धकासुरसूदनः ॥ ६६॥

अच्युतश्चाप्रमेयात्मा अक्षरश्चाश्वदायकः ।
अरिहन्ता ह्यवन्तीशश्चाहिभूषणभृत् सदा ॥ ६७॥

अवन्तीपुरवासी चाप्यवन्तीपुर-पालकः ।
अमरश्चामराधीशो ह्यमरारिविहिंसकः ॥ ६८॥

कामहा कामकामश्च कामदः करुणाकरः ।
कारुण्यः कमलापूज्यः कपाली कलिनाशनः ॥ ६९॥

कामारिकृत् कल्लोलः कालिकेशश्च कालजित् ।
कपिलः कोटितीर्थेशः कल्पान्तः कालहा कविः ॥ ७०॥

कालेश्वरः कालकर्ता कल्पाब्धिः कल्पवृक्षकः ।
कोटीश कामधेन्वीशः कुशलः कुशलप्रदः ॥ ७१॥

किरीटी कुण्डली कुन्ती कवची कर्परप्रियः ।
कर्पूराभः कलादक्षः कलाज्ञः किल्विषापहा ॥ ७२॥

कुक्कुटेशः कर्कटेशः कुलदः कुलपालकः ।
कञ्जाभिलाषी केदारः कुङ्कुमार्चितविग्रहः ॥ ७३॥

कुन्दपुष्पप्रियः कञ्जः कामारिः कामदाहकः ।
कृष्णरूपः कृपारूपश्चाथ कृष्णार्चिताङ्घ्रिकः ॥ ७४॥।

कुण्डः कुण्डेश्वरः काण्वः केशवैः परिपूजितः ।
कामेश्वरः कलानाथः कण्ठेशः कुङ्कुमेश्वरः ॥ ७५॥

कन्थडेशः कपालेशः कायावरोहणेश्वरः ।
करभेशः कुटुम्बेशः कर्केशः कौशलेश्वरः ॥ ७६॥

कोशदः कोशभृत् कोशः कौशेयः कौशिकप्रियः ।

खचरः खचराधीशः खचरेशः खरान्तकः ॥ ७७॥

खेचरैः पूजितपदः खेचरीसेवकप्रियः ।
खण्डेश्वरः खड्गरूपः खड्गग्राही खगेश्वरः ॥ ७८॥

खेटः खेटप्रियः खण्डः खण्डपालः खलान्तकः ।
खाण्डवः खाण्डवाधीशः खड्गता-सङ्गमस्थितः ॥ ७९॥

गिरिशो गिरिजाधीशो गजारित्वग्विभूषितः ।
गौतमो गिरिराजश्च गङ्गाधरो गुणाकरः ॥ ८०॥

गौतमीतटवासी च गालवो गोपतीश्वरः ।
गोकर्णो गोपतिर्गर्वो मजारिर्गरुडप्रियः ॥ ८१॥

गङ्गामौलिर्गुणग्राही गारुडीविद्यया युतः ।
गुरोर्गुरुर्गजारातिर्गोपालो गोमतीप्रियः ॥ ८२॥

गुणदो गुणकर्ता च गणेशो गणपूजितः ।
गणको गौरवो गर्गो गन्धर्वेण प्रपूजितः ॥ ८३॥

गोरक्षो गुर्विणीत्राता गेहो गेहप्रदायकः ।
गीताध्यायी गयाधीशो गोपतिर्गीतमोहितः ॥ ८४॥

गिरातीतो गुणातीतो गडःगेशो गुह्यकेश्वरः ।
ग्रहो ग्रहपतिर्गम्यो ग्रहपीडानिवारणः ॥ ८५॥

घटनादिर्घनाधारो घनेश्वरो घनाकरः ।
घुश्मेश्वरो घनाकारो घनरूपो घनाग्रणीः ॥ ८६॥

घण्टेवरो घटाधीशो घर्घरो घस्मरापहा ।
घुष्मेशो धोषकृद् घोषी घोषाघोषो घनध्वनिः ॥ ८७॥

घृतप्रियो घृताब्धीशो घण्टो घण्टघटोत्कचः ।
घटोत्कचाय वरदो घटजन्मा घटेश्वरः ॥ ८८॥

घकारो ङकृतो ङश्च ङकारो ङकृताङ् गजः ।
चराचरश्चिदानन्दश्चिन्मयश्चन्द्रशेखरः ॥ ८९॥

चन्द्रेश्वरश्चामरेशश्चामरेण विभूषितः ।
चामरश्चामराधीशश्चराचरपतिश्चिरः ॥ ९०॥

चमत्कृतश्चन्द्रवर्णश्चर्मभृच्चर्म चामरी ।
चाणक्यश्चर्मधारी च चिरचामरदायक ॥ ९१॥

च्यवनेशश्चरुश्चारुश्चन्द्रादित्येश्वराभिधः ।
चन्द्रभागाप्रियश्चण्डश्चामरैः परिवीजितः ॥ ९२॥

छत्रेश्वरश्छत्रधारी छत्रदश्छलहा छली ।
छत्रेशश्छत्रकृच्छत्री छन्दविच्छन्ददायकः ॥ ९३॥

जगन्नाथो जनाधारो जगदीशो जनार्दनः ।
जाह्नवीधृग् जगत्कर्ता जगन्मयो जनाधिपः ॥ ९४॥

जीवो जीवप्रदाता च जेताऽथो जीवनप्रदः ।
जङ्गमश्च जगद्धाता जगत्केन-प्रपूजितः ॥ ९५॥

जटाधरो जटाजूटी जटिलो जलरूपधृक् ।
जालन्धर-शिरश्छेत्ता जलजाङ्घ्रिर्जगत्पतिः ॥ ९६॥

जनत्राता जगन्निधिर्जटेश्वरो जलेश्वरः ।
झर्झरो झरणाकारी झूञ्झकृ झूझहा झरः ॥ ९७॥

ञकारश्च ञमुवासी ञजनप्रियकारकः ।
टकारश्च ठकारश्च डामरो डमरुप्रियः ॥ ९८॥

डण्डधृग् डमरुहस्तो डाकिह्नड्डमकेश्वरः ।
ढुण्ढो ढुण्ढेश्वरो ढक्को ढक्कनादप्रियः सदा ॥ ९९॥

णकारो णस्वरूपश्च णुणो-णिणो-णकारण ।
तन्त्रज्ञस्त्र्यम्बकस्तन्त्रीतुम्बुरुस्तुलसीप्रियः ॥ १००॥

तूणीरधृक् तदाकारस्ताण्डवी ताण्डवेश्वरः ।
तत्त्वज्ञस्तत्त्वरूपो च तात्त्विकस्तरविप्रभः ॥ १०१॥

त्रिनेत्रस्तरुणस्तत्त्वस्तकारस्तलवासकृत् ।
तेजस्वी तेजोरूपी च तेजःपुञ्जप्रकाशकः ॥ १०२॥

तान्त्रिकस्तन्त्रकर्ता च तन्त्रविद्या-प्रकाशकः ।
ताम्ररूपस्तदाकारस्तत्त्वदस्तरणिप्रियः ॥ १०३॥

तान्त्रेयस्तमोहा तन्वी तामसस्तामसापहा ।
ताम्रस्ताम्रप्रदाता च ताम्रवर्णस्तरुप्रियः ॥ १०४॥

तपस्वी तापसी तेजस्तेजोरूपस्तलप्रियः ।
तिलस्तिलप्रदाता च तूलस्तूलप्रदायकः ॥ १०५॥

तापीशस्ताम्रपर्णीशस्तिलकस्त्राणकारकः ।
त्रिपुरघ्नस्त्रयातीतस्त्रिलोचनस्त्रिलोकपः ॥ १०६॥

त्रिविष्टपेश्वरस्तेजस्त्रिपुर-पुरदाहकः ।
तीर्थस्तारापतिस्त्राता ताडिकेशस्तडिज्जवः ॥ १०७॥

थकारश्च स्थुलाकारः स्थूलः स्थविरः स्थानदः ।
स्थाणुः स्थायी स्थावरेशः स्थम्भः स्थावरपीडहा ॥ १०८॥

स्थूलरूपस्थितेः कर्ता स्थूलदुःखविनाशनः ।
थन्दिलस्थदलः स्थाल्यस्थलकृत् थलभृत् स्थली ॥ १०९॥

थलेश्वरस्थलाकारस्थलाग्रजस्थलेश्वरः ।
दक्षो दक्षहरो द्रव्यो दुन्दुभिवरदायकः ॥ ११०॥

देवो देवाग्रजो दानो दानवारिर्दिनेश्वरः ।
देवकृद् देवभृद् दाता दयारूपी दिवस्पतिः ॥ १११॥

दामोदरो दलाधारो दुग्धस्नायी दधिप्रियः ।
देवराजो दिवानाथो देवज्ञो देवताप्रियः ॥ ११२॥

देवदेवो दानरूपो दूर्वादलप्रियः सदा ।
दिग्वासा दरभो दन्तो दरिद्रघ्नो दिगम्बरः ॥ ११३॥

दीनबन्धुर्दुराराध्यो दुरन्तो दुष्टदर्पहा ।
दक्षघ्नो दक्षहन्ता च दक्षजामात देवजित् ॥ ११४॥

द्वन्द्वहा दुःखहा दोग्धा दुर्धरो दुर्धरेश्वरः ।

दानाप्तो दानभृद् दीप्तदीप्तिर्दिव्यो दिवाकरः ॥ ११५॥

दम्भहा दम्भकृद् दम्भी दक्षजापतिर्दीप्तिमान् ।
धन्वी धनुर्धरो धीरो धान्यकृद् धान्यदायकः ॥ ११६॥

धर्माधर्मभृतो धन्यो धर्ममूर्तिर्धनेश्वरः ।
धनदो धूर्जटिर्धान्यो धामदो धार्मिको धनी ॥ ११७॥

धर्मराजो धनाधारो धराधर-धरापतिः ।
धनुर्विद्याधरो धूर्तो धूलिधूसरविग्रहः ॥ ११८॥

धनुषो धनुषाकारो धनुर्धरभृतांवरः ।
धरानाथो धराधीशो धनेशो धनदाग्रजः ॥ ११९॥

धर्मभृद् धर्मसन्त्राता धर्मरक्षो धनाकरः ।
नर्मदो नर्मदाजातो नर्मदेशो नृपेश्वरः ॥ १२०॥

नागभुन्नागलोकेशो नागभूषणभूषितः ।
नागयज्ञोपवीतेयो नगो नागारिपूजितः ॥ १२१॥

नान्यो नरवरो नेमो नूपुरो नूपुरेश्वरः ।
नागचण्डेश्वरो नागो नगनाथो नगेश्वरः ॥ १२२॥

नीलगङ्गाप्रियो नादो नवनाथो नगाधिपः ।
पृथुकेशः प्रयागेशः पत्तनेशः पराशरः ॥ १२३॥

पुष्पदन्तेश्वरः पुष्पः पिङ्गलेश्वरपूर्वजः ।
पिशाचेशः पन्नगेशः पशुपतीश्वरः प्रियः ॥ १२४॥

पार्वतीपूजितः प्राणः प्राणेशः पापनाशनः ।
पार्वतीप्राणनाथश्च प्राणभृत् प्राणजीवनः ॥ १२५॥

पुराणपुरुषः प्राज्ञः प्रेमज्ञः पार्वतीपतिः ।
पुष्करः पुष्कराधीशः पात्रः पात्रैः प्रपूजितः ॥ १२६॥

पुत्रदः पुण्यदः पूर्णः पाटाम्बरविभूषितः ।
पद्माक्षः पद्मस्रग्धारी पद्मेन परिशोभितः ॥ १२७॥

फणिभृत् फणिनाथश्च फेनिकाभक्षकारकः ।
स्फटिकः फर्शुधारी च स्फटिकाभः फलप्रदः ॥ १२८॥

बद्रीशो बलरूपश्च बहुभोजी बटुर्बटुः ।
बालखिल्यार्चितो बालो ब्रह्मेशो ब्राह्मणार्चितः ॥ १२९॥

ब्राह्मणो ब्रह्महा ब्रह्मा ब्रह्मज्ञो ब्राह्मणप्रियः ।
ब्राह्मणस्थो ब्रह्मरूपो ब्राह्मण-परिपालकः ॥ १३०॥

ब्रह्ममूर्तिर्ब्रह्मस्वामी ब्राह्मणैः परिशोभितः ।
ब्राह्मणारिहरो ब्रह्म ब्राह्मणास्यैः प्रतर्पितः ॥ १३१॥

भूतेशो भूतनाथश्च भस्माङ्गो भीमविक्रमः ।
भीमो भवहरो भव्यो भैरवो भयभञ्जनः ॥ १३२॥

भूतिदो भुवनाधारो भुवनेशो भृगुर्भवः ।
भारतीशो भुजङ्गेशो भास्करो भिन्दिपालधृक् ॥ १३३॥

भूतो भयहरो भानुर्भावनो भवनाशनः ।
सहस्रनामभिश्चैतैर्महाकालः प्रसीदतु ॥ १३४॥

अथ महाकाल-सहस्रनाम-माहात्म्यम् ।
सूत उवाच -
इतीदं कीर्तितं तेभ्यो महाकालसहस्रकम् ।
पठनात् श्रवणात् सद्यो धूतपापो भवेन्नरः ॥ १३५॥

एकवारं पठेन्नित्यं सर्वसत्यं प्रजायते ।
द्विवारं यः पठेत् सत्यं तस्य वश्यं भवेज्जगत् ॥ १३६॥

त्रिवारं पठनान्मर्त्यो धनधान्ययुतो भवेत् ।
अतः स्थान-विशेषस्येदानीं पाठफलं शृणु ॥ १३७॥

वट-मूले -
वटमूले पठेन्नित्यमेकाकी मनुजो यदि ।
त्रिवारञ्च दिनत्रिंशत् सिद्धिर्भवति सर्वथा ॥ १३८॥

मनोरथसिद्धौ -
अश्वत्थे तुलसीमूले तीर्थे वा हरिहरालये ।

शुचिर्भूत्वा पठेद्यो हि मनसा चिन्तितं लभेत् ॥ १३९॥

सिद्धिदतीर्थे -
यत्र तीर्थेऽस्ति चाश्वत्यो वटो वा द्विजसत्तम!
स तीर्थः सिद्धिदः सर्वपाठकस्य न संशयः ॥ १४०॥

तत्रैकाग्रमना भूत्वा यः पठेच्छुभमानसः ।
यं यं काममभिध्यायेत् तं तं प्राप्नोति निश्चितम् ॥ १४१॥

मनसा चिन्तितं सर्वं महाकालप्रसादतः ।
लभते सकलान् कामान् पठनाच्छ्रवणान्नरः ॥ १४२॥

शतावर्तपाठफलम् -
शतावर्तं पठेद् यत्र चिन्तितं लभते ध्रुवम् ।
दुःसाध्यः सोऽपि साध्यः स्याद् दिनान्येकोनवींशतेः ॥ १४३॥

महाशिवरात्रौ पाठफलम् -
शिवरात्रिदिने मर्त्य उपवासी जितेन्द्रियः ।
निशामध्ये शतावर्तपठनाच्चिन्तितं लभेत् ॥ १४४॥

सहस्रावर्तनं तत्र तीर्थे ह्यश्वत्थसन्निधौ ।
पठनाद् भुक्तिर्मुक्तिश्च भवतीह कलौ युगे ॥ १४५॥

तद्दशांशः क्रियाद्धोमं तद्दशांशं च तर्पणम् ।
दशांशं मार्जयेन्मर्त्यः सर्वसिद्धिः प्रजायते ॥ १४६॥

गतं राज्यमवाप्नोति वन्ध्या पुत्रवती भवेत् ।
कुष्ठरोगाः प्रणश्यन्ति दिव्यदेहो भवेन्नरः ॥ १४७॥

सहस्रावर्तपाठेन महाकालप्रियो नरः ।
महाकालप्रसादेन सर्वसिद्धिः प्रजायते ॥ १४८॥

शापानुग्रहसामर्थ्यं भवतीह कलौ युगे ।
सत्यं सत्यं न सन्देहः सत्यञ्च गदितं मम ॥ १४९॥

अवन्तिकास्थिततीर्थेषु पाठफलम् -
 - कोटितीर्थे -
कोटितीर्थे पठेद् विप्र! महाकालः प्रसीदति ।

- रुद्रसरोवरे -
पाठाच्च रुद्रसरसि कुष्ठपीडा निवर्तते ॥ १५०॥

- सिद्धपीठे -
सिद्धपीठे पठेद् यो हि तस्य वश्यं भवेज्जगत् ।
- शिप्राकूले -
शिप्राकूले पठेत् प्राज्ञो धनधान्ययुतो भवेत् ॥ १५१॥

कालत्रयं पठेद् यश्च शत्रु-निर्मूलनं भवेत् ।
- भैरवालये -
अपमृत्युमपाकुर्यात् पठनाद् भैरवालये ॥ १५२॥

- सिद्धवटस्याधः -
सिद्धवटस्य च्छायायां पठते मनुजो यदि ।
वन्ध्यायां जायते पुत्रश्चिरञ्जीवी न संशयः ॥ १५३॥

- औखरे -
औखरे पठनात् सद्यो भूतपीडा निवर्तते ।
गयाकूपे -
गयाकूपे पठेद् यो हि तुष्टाः स्युः पितरस्ततः ॥ १५४॥

- गोमत्याम् -
गोमत्याञ्च पठेन्नित्यं विष्णुलोकमवाप्नुयात् ।
- अङ्कपाते -
अङ्कपाते पठेद् यो हि धूतपापः प्रमुच्यते ॥ १५५॥

- खड्गतासङ्गमे -
खड्गतासङ्गमे सद्यः खड्गसिद्धिमवाप्नुयात् ।
- यमतडागे -
पठेद् यमतडागे यो यमदुःखं न पश्यति ॥ १५६॥

- नवनद्याम् -
नवनद्यां पठेद् यो हि ऋद्धिसिद्धिपतिर्भवेत् ।
- योगिनी-पुरतः -
योगिनीपुरतः पाठं महामारीभयं न हि ॥ १५७॥

- वृद्धकालेश्वरान्तिके -
पुत्रपौत्रयुतो मर्त्यो वृद्धकालेश्वरान्तिके ।

पाठस्थाने घृतं दीपं नित्यं ब्राह्मणभोजनम् ॥ १५८॥

एकादशाथवा पञ्च त्रयो वाऽप्येकब्राह्मणः ।
भोजनं च यथासाध्यं दद्यात् सिद्धि-समुत्सुकः ॥ १५९॥

विधिवद् भक्तिमान् श्रद्धायुक्तो भक्तः सदैव हि ।
पठन् यजन् स्मरँश्चैव जपन् वापि यथामति ॥ १६०॥

महाकालस्य कृपया सकलं भद्रमाप्नुयात् ।

इति श्रीप्रकृष्टनन्दोक्तागमे श्रीकृष्णसुदाम्नः संवादे
महाकालसहस्रनामस्तोत्रं सम्पूर्णम् ।

॥ ॐ नमो नमः ॥ शिवार्पणमस्तु